॥ मनोमीमांसा ॥

नायं जनो मे सुखदुःखहेतु-
र्न देवतात्मा ग्रहकर्मकालाः ।
मनः परं कारणमामनन्ति
संसारचक्रं परिवर्तयेद्यत् ॥ १॥

मनो गुणान्वै सृजते बलीय-
स्ततश्च कर्माणि विलक्षणानि
शुक्लानि कृष्णान्यथ लोहिनानि
तेभ्यः सवर्णाः सृतयो भवन्ति ॥ २॥

अनीह आत्मा मनसा समीहता
हिरण्मयो मत्सख उद्विचष्टे ।
मनः स्वलिङ्गं परिगृह्य कामा-
न्जुषन्निबद्धो गुणसङ्गतोऽसौ ॥ ३॥

दानं स्वधर्मो नियमो यमश्च
श्रुतं च कर्माणि च सद्व्रतानि ।
सर्वे मनोनिग्रहलक्षाणान्ताः
परो हि योगो मनसः समाधिः ॥ ४॥

समाहितं यस्य मनः प्रशान्तं
दानादिभिः किं वद तस्य कृत्यम् ।
असंयतं यस्य मनो विनश्य-
द्दानादिभिश्चेदपरं किमेभिः ॥ ५॥

मनोवशेऽन्ये ह्यभवन्स्म देवा
मनश्च नान्यस्य वशं समेनि
भीष्मो हि देवः सहसः सहीया-
न्युञ्ज्याद्वशे तं स हि देवदेवः ॥ ६॥

तम्दुर्जयं शत्रुमसह्यवेगम-
रुन्तुदं तन्न विजित्य केचित् ।
कुर्वन्त्यसद्विग्रहमत्र मर्त्यै-
र्मित्राण्युदासीनरिपून्विमूढाः ॥ ७॥

देहं मनोमात्रमिमं गृहीत्वा

ममाहसित्यन्धधियो मनुष्याः ।
एषोऽहमन्योऽयमिति भ्रमेण
दुरन्तपारे तमसि भ्रमन्ति ॥ ८॥

जनस्तु हेतुः सुखदुःखयोश्चे-
त्किमात्मनश्चात्र हि भौमयोस्तत् ।
जिह्वां क्वचित्सन्दशति स्वदद्भि-
स्तद्वेदनायां कनमाय कुप्येत् ॥ ९॥

दुःखस्य हेतुर्यदि देवतास्तु
किमात्मनस्तत्र विकारयोस्तत् ।
यदङ्गमङ्गेन निहन्यते क्वचि-
त्क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ १०॥

आत्मा यदि स्यात्सुखदुःखहेतुः
किमन्यतस्तत्र निजस्वभावः ।
न ह्यात्मनोऽन्यद्यदि तन्मृषा स्या-
त्क्रुध्येत कस्मान्न सुखं न दुःखम् ॥ ११॥

ग्रहा निमित्तं सुखदुःखयोश्चेत्-
किमात्मनोऽजस्य जनस्य ते वै ।
ग्रहैर्ग्रहस्यैव वदन्ति पीडां
क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ १२॥

कर्मास्तु हेतुः सुखदुःखयोश्चे-
त्किमात्मनस्तद्धि जडाजडत्वे ।
देहस्त्वचित्पुरुषोऽयं सुपर्णः
क्रुध्येत कस्मै न हि कर्म मूलम् ॥ १३॥

कालस्तु हेतुः सुखदुःखयोश्चे-
त्किमात्मनस्तत्र  तदात्मकोऽसौ ।
नाग्नेर्हि तापो न हिमस्य तत्स्या-
त्क्रुध्येत कस्मै न परस्य द्वन्द्वम् ॥ १४॥

न केनचित्क्वापि कथञ्चनास्य
द्वन्द्वोपरागः परतः परस्य ।
यथाहमः संसृतिरूपिणः स्या-
द्देवं प्रबुद्धो न बिभेति भूतैः ॥ १५॥

एतां स आस्थाय परात्मनिष्ठा-
मध्यासितां पूर्वतमैर्महर्षिभिः ।
अहं तरिष्यामि दुरन्तपारं
तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ १६॥

इति मनोमीमांसा सम्पूर्णा ।